## भामती

एतस्य सूत्रस्य पातनिकामाह भाष्यकारः—"ब्रह्म जिज्ञा-
ठ्यमित्युक्तम्, किंलक्षणं पुनस्तद्ब्रह्म"। अत्र यद्यपि
पज्ञानस्य प्रधानस्य प्रतिज्ञया तदङ्गान्यपि प्रमाणादीनि प्रतिज्ञा-
तथापि स्वरूपस्य प्राधान्यात् तदेवाक्षिप्य प्रथमं समर्थ्यते। तत्र
नुभूयते तत्सर्वं परिमितम् अविशुद्धमबुद्धं विध्वंसि, न तेनो-
तद्विरुद्धस्य नित्यशुद्धबुद्धस्वभावस्य ब्रह्मणः स्वरूपं शक्यं
तुम्। नहि जातु कश्चित् कृतकत्वेन नित्यं लक्षयति। न च
नित्यत्वादिना तल्लक्ष्यते, तस्यानुपलब्धचरत्वात्। प्रसिद्धं हि

### प्रकाशः

प्रारिप्सिताखिलविचारस्य प्रथमाधिकरणेन सङ्गतिमभिदधाति-तर्हि
विषयादिसद्भावाद् विचारारम्भः समर्थितः तमुपजीव्य चेतरो विचारः
भवत्युपपाद्योपपादकभावः सम्बन्धः। जिज्ञासितव्यमिति भाष्यस्य
मित्यर्थं स्फोरयितुमाह—मीमांसेति। प्रथमेन सूत्रेण द्वितीयसूत्र
लक्षणां सङ्गतिमाह—एतस्येति। पातनिकाम्। अवतरणम्।
मुमुक्षुणा वेदान्तार्थविचारः कर्तव्य इति प्रतिज्ञायां ब्रह्मस्वरूप
प्रमाणयुक्तिसाधनफलविचारा अपि प्रथमेन सूत्रेणावरुद्धा इत्यभिहितम्
विचार्यत्वे प्राप्ते कथं प्रथमं ब्रह्मैव विचार्यतेऽत आह—अत्रेति।
ज्ञानस्य ब्रह्मणो यत्स्वरूपं तद्विषयकज्ञानस्य वृत्तेः। सजातीयविजातीय
फलको धर्मो भवति लक्षणम्, तदिह किं परिदृश्यमानं जगदेव
न्धेन ब्रह्मणि विद्यमानं लक्षणम् उत नित्यशुद्धत्वादिकमिति
निराकुरुते—तस्येत्यादि।

### विकासः

तेनोपलब्धेनेत्यादि। ननु यथाऽनित्येन शब्देन नित्य आकाशो
ब्रह्माप्यनित्येन जगता लक्ष्यतामिति चेन्? 'एतस्मादात्मन आकाशः संभूत'
सिद्धान्ते आकाशस्याप्युत्पादध्वंसयोः स्वीकारेण दृष्टान्ताभावात्।
नदेवोपपत्त्त यदाकाशस्येतरेः पूर्वं ध्वंसस्य चोत्तरं मूर्तनैव जगदवारत्वात्
चेन्? अथेदं विदांकुर्वन्तु बहिर्मुखनामपरिस्यजन्तः श्रुतिप्रामाण्यमुपगच्छन्तोऽपि
लब्ध्य स्वानुकूल्येन यथाकथंचिदर्थं कल्पयन्तो भवन्तो वेदान्तरहस्यम् यथावत्
कारादयः स्वकारणे (अविनाशाम्)लीनाः अप्रतिभासमानाः सुषुप्त्युत्तरं प्रति

## विकासः

पुनः प्रतिभासन्ते, एवमेव महासुषुप्तिस्थानीये प्रलये पृथिव्यादिविविक्ततयाऽननुभूयमाना गगनादय उच्चावचप्रपञ्चाः स्वकारणेऽविद्यायां लीनाः सृष्ट्यादौ व्यवहारयोग्यतां नयन्तः प्रादुर्भवन्तीत्युच्यन्ते । दृष्टिसृष्टिवादे तु ब्रह्मातिरिक्ता आकाशादयः सर्व एव पदार्थाः अविद्या-वशात्तैस्तैर्जीवैः कल्प्यमानाः प्रतिजीवं भिद्यमानाः जागरेऽनुभूयमाना अदृष्टसंस्कारादिभिन्नाः यथाऽनुभवं तदानीमेव कल्प्यमानाः पूर्वं पश्चाद्वा स्थितिमलभमानाः स्वप्नेऽप्यननुवर्तमानाः सुषुप्तौ सुतरां लीयमानाः मनागपि विद्यमानतां नाश्रयन्ते, यदा पुनर्भोगोन्मुखकर्मवशान्निवर्तते सुषुप्तिस्तदा जायमाने जागरणे यथाऽनुभवमाकाशादयस्ते ते पदार्था आविर्भवन्तः प्रातिभा-सिका एवेति भवत्याकाशस्यापि प्रातिभासिकस्योत्पत्तिः । तदेतदाह—श्रुतिः 'यथाऽग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्तीत्यादिः ।

ननु त्वङ्मनःसंयोगस्य ज्ञानसामान्यं प्रति कारणतामुपेत्य वर्तमानस्यापि जगतः सुषुप्तौ पुरीतति प्रविष्टेन मनसा त्वक्संयोगाभावादेव ज्ञानादीनामनुत्पत्तिसिद्धौ तदानी-मन्तःकरणादेः समस्तस्य जगतो लयो नोचितः स्वीकर्तुम्, यथाऽग्नेरित्यादिश्रुतिस्तूपच-रितार्था भविष्यतीति चेत्,

अत्र वदामः ज्ञानेच्छादीनामन्तःकरणधर्मत्वस्यैव बहुतरश्रुतिस्मृतिपूर्वोक्तयुक्तिभिः प्रदर्शितत्वेनान्तःकरणस्य पुरीतति प्रविष्टस्यापि तदानीं लयाभावे जाग्रद्दशायामिव संस्का-रादियावत्कारणसत्त्वात्तदानीमपि स्मृत्यनुमित्यादेरिच्छाद्वेषादेश्च प्रसक्तौ सुषुप्तेरेवानुदयः प्रसज्येत, तस्मात् सुषुप्त्युपपत्त्यर्थमाकाशादिकल्पनामूलस्य तत्तत्पुरुषीयान्तःकरणस्य तदानीं लयोऽवश्यं वाच्य इति प्रतिदिनमाकाशादेरुत्पत्तिविनाशावश्यं भवतः किमु वक्तव्यं प्रलये इति, तस्मान्न वैशेषिकादिसम्मतमाकाशस्य नापि ब्रह्मातिरिक्तस्य कस्यचिदन्यस्य अतोऽ-न्यदार्तमित्यादिश्रुतिविरुद्धं नित्यत्वं शक्यं व्यवस्थापयितुमाविद्यकस्य जगत इति ।

सति चैवं नित्यद्रव्येष्वाकाशादिषु विशेषपदार्थकल्पनमपि वैशेषिकाणां नैयायिकानां च न युक्तियुक्तं प्रतीमः, तथाहि विशेषं स्वीचिकीर्षव इत्थमाहुः घटादीनां द्व्यणुकपर्यन्तानां मवयवस्वरूपकारणभेदादेव भेदः परमाण्वाकाशादीनां निरवयवानां नित्यानां तु को भेदक इत्यस्यां चिन्तायां न कश्चिद्भेदकोऽनुभवपथमारोहति विना विशेषम्, नहि परमाणु-गताः पृथिवीत्वादयो जातयः संभवन्ति भेदिकाः तथासति जलीयादिपरमाणुतः पार्थिव-परमाणूनां भेदस्य सिद्धावपि पार्थिवादिपरमाणूनामसंख्यानां परस्परं को भेदकः स्यात् नहि परमाणुरूपं तथा, तस्य च भेदकस्तन्निष्ठोगन्धस्तस्य च भेदकस्तन्निष्ठः स्पर्शस्तस्य च भेदकं तन्निष्ठं रूपमित्येवंक्रमेण तत्तत्परमाणुनिष्ठा गुणा आवर्तमाना न भेदकाः संभवन्ति अन्यो-न्याश्रयचक्रकयोरापत्तेः नापि तन्निष्ठं तद्व्यक्तित्वं तस्यापि भेदकचिन्तायामाश्रयीभूतःपरमाणुरेव भेदकः स्यादित्यन्योन्याश्रयो न निवार्येत अतो नित्यद्रव्येषु विशेषः स्वीकार्यः नित्यद्रव्याणां च भेदसिद्धौ तन्मूलाः सर्व एव पदार्थाः भवन्ति भिन्नाः, विशेषस्य च भेदकचिन्तायां

विकासः

नास्ति कश्चिदन्यो भेदकोऽनवस्थाप्रसङ्गात् अपि तु स स्वतो व्यावृत्त एवे... अयोदोषः सोढव्यो भवति तथाच अयं विशेषस्तद्विशेषाद्भिन्नः स्वल्पमि... प्रसरतीति ।

अत्रेदं समालोचनीयम् स्वस्य स्वभेदकत्वं यथा विशेषस्वत्वं ... सोढव्यो भवति भवता तथा परमाणोरेव स्वतो व्यावर्त्तकत्वमुपगम्यतामन्ये ... न सह्यते व्यर्थमाकाशादिषु परमाणुषु चासंख्येष्वसंख्याः विशेषास्तेषां ... संख्या अभावप्रतियोगित्वादयो धर्मास्तत्सम्बन्धाश्चासंख्याः गौरवग्रताः ... वद्भिर्लाघवान्वेषिभिः कल्प्यते, महच्चित्रमेतत्

नच जातिमत्पदार्थानां जात्यैव व्यावर्तनमिति नियमात् जातिरेव ... कतावच्छेदिका (अतएव न विशेषत्वं जातिरूपेयते स्वतो व्यावर्तकत्वहान्यापत्तेः) ... व्यक्त्यन्तरसाधारणी व्यभिचारिणी कथं स्वाश्रयाणां परस्परं व्यावर्तयितुं ... परमाण्वादयो भवन्ति स्वतो व्यावृत्ता इति वाच्यम् एतादृशनियमे मानाभावात्, ... परमाण्वाकाशादीनां नित्यत्वस्यैवासिद्धतया तद्व्यावृत्तये विशेषाणां कल्पयितुं ... तस्मात् घटादीनां पटादिभ्यो जात्या स्वस्वकारणविशेषेण च व्यावृत्तिः नित्यत्वेनाभ्युप... परमाण्वाकाशादीनां च स्वतो व्यावृत्तिरेव भवद्भिरभ्युपगन्तुमुचिता अस्मन्मते ... नामपि कारणविशेषेण स्वस्वासाधारणधर्मविशेषेणैव च व्यावृत्तिरतो न विशेषपदा... नामर्हति तस्माद् बालोपलालनं तदिति मन्तव्यम् ।

## शाङ्करभाष्यम्

जन्म उत्पत्तिरादिरस्येति तद्गुणसंविज्ञानो बहुव्रीहिः । जन्मस्थितिभङ्गं समासार्थः । जन्मनश्चादित्वं श्रुतिनिर्देशापेक्षं वस्तुवृत्तापेक्षं च । श्रुतिनिर्देशस्तावत् ... इमानि भूतानि जायन्ते, (तैत्ति० ३।१) इत्यस्मिन् ... जन्मस्थितिप्रलयानां क्रमदर्शनात् । वस्तुवृत्तमपि ... लब्धसत्ताकस्य धर्मिणः स्थितिप्रलयसंभवात् । ... प्रत्यक्षादिसंनिधापितस्य धर्मिण इदमा निर्देशः ।

### भामती

भवति, नात्यन्ताप्रसिद्धम् । एवं च न शब्दोऽप्यत्र प्रक्रमते, अत्यन्ताप्रसिद्धतया ब्रह्मणोऽपदार्थस्यावाक्यार्थत्वात् । तस्माल्लक्षणाभावाद् न ब्रह्म जिज्ञासितव्यमित्याक्षेपाभिप्रायः । तमिममाक्षेपं भगवान् सूत्रकारः परिहरति—'जन्माद्यस्य यतः' इति । मा भूदनुभूयमानं जगत् तद्धर्मतया तादात्म्येन वा ब्रह्मणो लक्षणं तदुत्पत्त्या तु

### प्रकाशः

द्वितीयं निरस्यति नचेति । ननु लोकासिद्धमपि वेदेनैव ज्ञाप्यतामत आह—एवं चेति । माभूदिति । अयमभिसन्धिः यदिदं लक्षणमाक्षिप्यते भवता तत्किं शुद्धस्य किं वा सविशेषस्य 'ईश्वरस्य' आद्ये शुद्धस्य 'निर्गुणस्य' निर्धर्मकत्वादिष्टापत्तिरेव द्वितीये तु जन्मादिकारणत्वरूपमेव लक्षणं संभवतीति न काचिदनुपपत्तिरिति ।

ननु भवत्वेवं सविशेषस्य लक्षणं परंतु अथातोब्रह्मजिज्ञासेत्यत्र निर्गुणमेव ब्रह्म जिज्ञासितम् न तु सविशेषं निर्विशेपब्रह्मसाक्षात्कारस्यैवाविद्यानिवर्तकत्वात् अतएव मुण्डकोपनिषदि 'नान्तः प्रज्ञं न बहिः प्रज्ञं नाप्रज्ञमदृष्टमव्यवहार्यमग्राह्यमलक्षणमचिन्त्यमपदेश्यमेकात्मप्रत्ययसारं प्रपञ्चोपशमं शान्तं शिवमद्वैतं चतुर्थं मन्यते स आत्मा विज्ञेयः; इति श्रुतौ निर्विशेपस्यैव विज्ञेयत्वाभिधानात् तल्लक्षणमेवाकाङ्क्षितमिति चेत् ।

अत्रेदमवधारयन्तु प्रणिहितमानसाः शास्त्रतत्त्वं बुभुत्सन्तो भवन्तः ! द्विविधं ब्रह्म शास्त्रेणावगम्यते तत्र यत् नामरूपविकारोपाधिविशिष्टं सगुणं ब्रह्म 'ईश्वरः' 'यः सर्वज्ञः स सर्ववित्, पराऽस्य शक्तिर्विविधैव श्रूयते, तदैक्षत एकोऽहं बहु स्यांप्रजायेय. इत्यादि श्रुतिप्रतिपाद्यं तदुपास्यम् 'उपासनया लभ्यं भवति । यच्च 'अशब्दमस्पर्शमरूपमव्ययम' यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा, निःकलं निःक्रियं शान्तं निरवद्यं निरञ्जनम्, नेतिनेतीत्यादिश्रुतिप्रतिपाद्यं निर्गुणं ब्रह्म तत् श्रवणमनननिदिध्यासनैः साक्षात्करणीयं ज्ञेयमित्युच्यते यदभिधीयते गीतायां भगवता ज्ञेयं यत्तत्प्रवक्ष्यामीत्यादिना-( १३-१२ ) एवं च यः सोपाधिकब्रह्मध्यानार्चनाद्यभ्यासपरिपाकसंजातविशुद्धसत्त्वः संसारासारतामवलोकमानो निरुपाधिकं ब्रह्मानुसन्दधानोऽद्वेष्टृत्यादिगीताद्वादशाध्यायोक्तगुणविशिष्टभक्तिमार्गीयमुख्याधिकारी सोऽपि श्रवणमननिदिध्यासनान्यावर्तयन् निर्विशेपं ब्रह्म साक्षात्करोतिति द्विविधं वेदान्तार्णवस्य स्रोतः प्रवर्तते इत्यभिप्रेत्य निरुपाधिकसोपाधिकयोरुभयोरेव जिज्ञास्यत्वेऽपि

शाङ्करभाष्यम्

जन्मादिधर्मसम्बन्धार्था । यत इति कारणनिर्देशः ।
जगतो नामरूपाभ्यां व्याकृतस्यानेककर्तृभोक्तृसं

भामती

भविष्यति, देशान्तरप्राप्तिरिव सवितुर्व्रज्याया इति तात्पर्यार्थः
वयवान् विभजते—जन्मोत्पत्तिरादिरस्येति । लाघवाय
जन्मादीति नपुंसकप्रयोगः कृतस्तदुपपादनाय समाहारमाह-उत्प
तिभङ्गमिति । जन्मनश्च इत्यादिः 'कारणनिर्देश'
सन्दर्भो निगदव्याख्यातः । स्यादेतत्—प्रधानकालग्रहलोकपाले
इच्छास्वभावाभावेषूपप्लवमानेषु सत्सु सर्वज्ञं सर्वशक्तिस्वभा
जगज्जन्मादिकारणमिति कुतः सम्भावनेत्यत आह—अस्य जगतः
अत्र नामरूपाभ्यां व्याकृतस्येति चेतनभावकर्तृकत्वगम

प्रकाशः

निरुपाधिकलक्षणासंभवस्योक्तश्रुत्यापि प्रदर्शितत्वेन सोपाधिकमेव
संभवति लिलक्षयिषितमतस्तल्लक्षणमेव प्रदर्शितं सूत्रकृता । अतएव च
पान्ते, 'अस्ति तावत् नित्यशुद्धबुद्धमुक्तस्वभावं सर्वज्ञं सर्वशक्ति
निर्विशेषसविशेषयोरुभयोरुपादानं कृतं गूढाभिप्रायवता भगवता
मिश्रैरपि पूज्यचरणैर्मैथिलानां गौरवसम्पादकैर्टीकाकारैः 'वेदान्त
ब्रह्मणो रूपं दर्शयित्वाऽविद्योपाधिकं रूपमाह सर्वज्ञं सर्वशक्तिसमन्वि
प्रकटीकृतोऽभिप्रायस्तत्र भामत्याम्, तस्मात्कल्पितविशेषवतोऽपि ब्रह्म
शाविषयकस्य जायमानस्य निर्विकल्पसाक्षात्कारस्याज्ञानकल्पित
खिलद्वयोन्मूलकत्वमिति भवति सविशेषमपि ब्रह्म जिज्ञास्यमिति ।
प्राप्तिरिति । देशान्तरप्राप्तिः सवितृकर्तृकायाः व्रज्यायाः 'गमनस्य'
मापिका तथा जगदपि स्वकारणमनुमापयति तदेव कारणं ब्रह्म इति
भावः । जन्मआदिर्ययोः स्थितिभङ्गयोः तौ जन्मादी इति यदि विग्रह
भक्तिविभावेन यणादेशाभावात् जन्मादी अस्येति सूत्रस्वरूपं स्यात् अत
तस्मात्समाहारद्वन्द्व एव सूत्रकृतोऽभिमत इत्याह—लाघवायेति जगतः
भाष्योक्तानां कृत्यं प्रदर्शयितुं भूमिकामारचयति स्यादेतदिति । तत्र

## भामती

प्रधानाद्यचेतनकर्तृकत्वं निरुपाख्यकर्तृकत्वं च व्यासेधति। यत् खलु नाम्ना रूपेण च व्याक्रियते तच्चेतनकर्तृकं दृष्टं यथा घटादि, विवादाध्यासितं च जगन्नामरूपव्याकृतं तस्माच्चेतनकर्तृकं संभाव्यते। चेतनो हि बुद्ध्यावालिख्य नामरूपे घट इति नाम्ना रूपेण च कम्बुग्रीवादिना बाह्यं घटं निष्पादयति। अत एव घटस्य निर्वर्त्यस्याप्यन्तःसंकल्पात्मना सिद्धस्य कर्मकारकभावो—घटं करोतीति। यथाहुः—बुद्धिसिद्धं तु न तदसत् इति। तथा चाचेतनो बुद्ध्यावनालिखितं करोतीति न शक्यं संभावयितुमिति भावः। स्यादेतत्—चेतना ग्रहा लोकपाला वा नामरूपे बुद्ध्यावालिख्य जगज्जनयिष्यन्ति, कृतमुक्तस्वभावेन ब्रह्मणेत्यत आह—अनेककर्तृभोक्तृसंयुक्तस्येति। केचित् कर्तारो भवन्ति, यथा सूदर्त्विगादयो, न भोक्तारः। केचित्तु भोक्तारः, यथा श्राद्धवैश्वानरीयेष्ट्यादिषु पितापुत्रादयो न कर्तारः तस्मादुभयग्रह-

### प्रकाशः

न कश्चिदन्यो नियन्ता पदार्थानाम्, किंतु स्वभाव एव, यदृच्छावादे तु स्वभावोऽपि न नियामकः। उपप्लवमानेषु ब्रह्मणः कारणत्वं निराकुर्वाणेषु। व्यासेधति प्रतिषेधति। उत्पत्तेः प्रागसतः बुद्ध्यालेखने युक्तिमाह—अतएवेति। निर्वर्त्यस्य सम्पादनीयस्य, कार्यमुत्पत्तेः प्राक्सत्त्वेनाप्रतीयमानमपि बुद्ध्यारूढरूपेण सदेव न त्वसत् कथमन्यथा घटंकरोतीति घटादेः कर्मत्वनिर्देश उपपद्यत इत्यर्थः। अत्र सत्कार्यवादिनामनुमतिमाह—यथाऽऽहुरिति। सूदः पाचकः यः पाचकः केवलं वेतनमेव गृह्णाति न स्वयमपि स्वपाचितं भुङ्क्ते सोऽत्र विवक्षितः। यजमानस्य यज्ञंसम्पादयन्तोऽपि ऋत्विजो न तत्फलं स्वर्गादिकमाप्नुवन्तीति कर्तार एव ते न भोक्तारः। श्राद्धवैश्वानरीयेति श्राद्धस्य पित्रादिगतस्वर्गोद्देशेन पुत्रादिना क्रियमाणस्य फलं पित्रादावेव न कर्तरि, एवं वैश्वानरं द्वादशकपालं निर्वपेत्पुत्रे जाते इत्युपक्रम्य यस्मिन् जाते एतामिष्टिं निर्वपति पूत एव स तेजस्व्यन्नाद इन्द्रियावी पशुमान् भवति, इतिश्रुत्या पित्रा सम्पादनीयस्य वैश्वानरीयेष्ट्यादेः पूतत्वादिकं फलं पुत्रे एव भवतीत्यर्थः।

विकासः

सर्वमेतदाकस्मिकापरनाम्नीति तदेतदुपपादि न्यायकुसुमाञ्जलौ कमलभास्करैरुदयनाचार्यैः अकस्मादेव भवतीति चेन्न

हेतुभूतिनिषेधो न स्वानुपाख्यविधिर्न च ।
स्वभाववर्णना नैव अवधेर्नियतत्वतः ॥

इत्यादिना, एतत्कारिकाया अयमभिप्रायः अकस्मादेव भवतीतिवदतः ... संसारः कस्मादपि हेतोर्न भवतीति हेतुनिषेधोऽभिमतस्तदा कारणानपेक्षत्वात् ... भवनं प्रसज्येत, यदि च भवननिषेधः तदा कदाऽपि कार्यं न स्यात्, यदि च ... त्यर्थोऽभिमतस्तदापि उत्पत्तेः पूर्वं स्वयमसतः स्वोत्पत्तावप्रभुत्वात् कदाचिदपि ... पूर्वोक्त एव दोषः, यदि चानुपाख्यात् गगनकुसुमादेर्भवतीत्यर्थस्तदा प्राणि ... कार्याणां सदातनत्वप्रसङ्गः तस्मान्नाकस्मिकत्वमस्य संसारस्य ।

अथास्तु तर्हि स्वाभाविक एवायं संसारः यथा हि नियतदेशस्वभावाः ... नियतकालस्वभावा अपीति संभवत्येतत्पक्षे सर्वापत्त्यनुपपत्त्योः परिहार इति ... संसारः कारणानपेक्षः स्वभावादेव स्यात्तदा सर्वदैव स्यात् न स्यादेव वा न तु ... ये हि कारणानपेक्षास्ते निरवधयः सन्तो नियमेन कादाचित्कत्वस्वभावविरहि... यथा आत्मा, इत्थं च यदि घटपटादीनां कारणानपेक्षत्वं स्यान्निरवधित्वमपि ... सति कादाचित्कत्वं तेषां न स्यात् तस्मात्कार्यकारणपरम्पराऽभ्युपगम ...

अपि च स्वभावः प्रत्येकं घटादीनां धर्मो न घटादिकं विनाऽवतिष्ठेत ... द्युत्पत्तेरनन्तरं तस्य स्वभाव उत्पद्येत तत्समकालं वा उभयथाऽपि न स्वभाव... कार्यपूर्ववृत्तित्वविरहात् घटादेरुत्पत्तेः पूर्वं तु तत्स्वभावः कथमाश्रयं विना ... यमाश्रयेत स एव घटः स्यात् न वस्त्वन्तरं, न च जात्यादिवदाश्रयं विना ... अनिर्वचनीयवादिनां दृष्टान्तासिद्धेः जातेरपि खण्डितत्वात् ... स्वभाववाद इति ।

शाङ्करभाष्यम् ·

प्रतिनियतदेशकालनिमित्तक्रियाफलाश्रयस्य मनसा... चिन्त्यरचनारूपस्य जन्मस्थिति भङ्गं यतः सर्वज्ञात्सर्व... कारणाद्भवति तद्ब्रह्मेति वाक्य शेषः । अन्येषामपि... विकाराणां त्रिष्वेवान्तर्भाव इति जन्मस्थितिनाशा... ग्रहणम् । यास्कपरिपठितानां तु 'जायतेऽस्ति, इत्या...

भामती

णम् । "देशकालनिमित्तक्रियाफलानि" इतीतरेतरद्वन्द्वः । देशादीनि च प्रतिनियतानि चेति विग्रहः । तदाश्रयो जगत् तस्य । केचित् खलु प्रतिनियतदेशोत्पादा यथा कृष्णमृगादयः । केचित् प्रतिनियतकालोत्पादाः यथा कोकिलरवादयः । केचित्प्रतिनियतनिमित्ताः यथा, नवाम्बुदध्यानादिनिमित्ता बलाकागर्भादयः केचित्प्रतिनियतक्रियाःयथा ब्राह्मणानां याजनादयो नेतरेषाम् । एवं प्रतिनियतफलाः यथा केचित्सुखिनः केचिद् दुःखिनः, एवं य एव सुखिनस्त एव कदाचिद् दुःखिनः । सर्वमेतदाकस्मिकापरनाम्नि यादृच्छिकत्वे च स्वाभाविकत्वे चासर्वशक्तिकर्तृकत्वे च न घटते, परिमितज्ञानशक्तिभिर्ब्रह्लोकपालादिभिर्ज्ञातुं कर्तुं चाशक्यत्वात् । तदिदमुक्तम् **मनसाप्यचिन्त्यरचनारूपस्येति** । एकस्या अपि हि शरीररचनाया रूपं मनसा न शक्यं चिन्तयितुं कदाचित्, प्रागेव जगद्रचनायाः, किमङ्ग पुनः कर्त्तुमित्यर्थः । सूत्रवाक्यं पूरयति—**तद्ब्रह्मेति वाक्यशेषः** । स्यादेतत्, कस्मात् पुनर्जन्मस्थितिभङ्गमात्रमिहादिग्रहणेन गृह्यते, न तु वृद्धिपरिणामापक्षया अपीत्यत आह—**अन्येषामपि भावविकाराणां वृद्ध्यादीनां त्रिष्वेवान्तर्भाव इति** । वृद्धिस्तावदवयवोपचयः । तेनाल्पावयवादवयविनो द्वितन्तुकादन्य एव

प्रकाशः

वाक्यशेष इति तस्माज्जगत्कारणत्वादिकं ब्रह्मणो लक्षणं सम्पन्नमिति भावः । ननु न ब्रह्मणः किमपि लक्षणं भवति संभावनार्हम् सजातीयविजातीयव्यावृत्तिफलकस्यैव धर्मस्य लक्षणत्वात् ब्रह्मणः सजातीयस्य कस्य चिदभावात् साजात्याभावे च तत्सापेक्षस्य वैजात्यस्याप्यभावादिति चेन्न जगत्कारणत्वेन-पराभिमतं प्रधानादिकमेव सजातीयं तच्च कल्पितं पारमार्थिकं चेत्यन्यदेतत्, एवं सति विजातीयमपि नाप्रसिद्धं घटादेरखिलकारणत्वविरहिण एव विजातीयत्वादित्यवगन्तव्यम् ।

शाङ्करभाष्यम्

ग्रहणे तेषां जगतः स्थितिकाले संभाव्यमानत्वान्मूल
णादुत्पत्तिस्थितिनाशा जगतो न गृहीताः स्युरित्याश

भामती

महान् पटो जायत इति जन्मैव वृद्धिः। परिणामोऽपि त्रिविधो
लक्षणावस्थालक्षण उत्पत्तिरेव। धर्मिणो हि हाटकादेर्धर्मलक्षण
णामः कटकमुकुटादिस्तस्योत्पत्तिः। एवं कटकादेरपि प्रत्युत्पन्न
क्षणः परिणाम उत्पत्तिः। एवमवस्थापरिणामो नवपुराणत्वादि
अपक्षयस्त्ववयवह्रासो नाश एव। तस्माज्जन्मादिषु यथास्वमन्त
वृद्ध्यादयः पृथङ्नोक्ता इत्यर्थः। अथैते वृद्ध्यादयो न जन्मादि
भवन्ति तथाप्युत्पत्तिस्थितिभङ्गमेवोपादातव्यम्, तथासति हि
पादके यतो वा इमानि भूतानीति वेदवाक्ये बुद्धिस्थीकृते
कारणं ब्रह्म लक्षितं भवति, अन्यथा तु जायतेऽस्ति वर्धत इत्या
ग्रहणे तत्प्रतिपादकं नैरुक्तवाक्यं बुद्धौ भवेत्, तच्च न मूलकार
पादनपरम्, महासर्गादूर्ध्वं स्थितिकालेऽपि तद्वाक्योदितानां उत्प
भावविकाराणामुपपत्तेः, इति शङ्कानिराकरणार्थं वेदोक्तोत्पत्ति

प्रकाशः

धर्मलक्षणावस्थेति। एतान् त्रिविधानपि परिणामान् पातञ्जला
तथाच तदीयं सूत्रम् 'एतेन भूतेन्द्रियधर्मलक्षणावस्था परिणामा
इति तज्ज्ञानफलं तत्रैव प्रदर्शितम्, परिणामत्रयसंयमादतीतानागतज्ञान
तानेतान् परिणामान् क्रमेण विवेचयति—धर्मिणो हीति। हाटक
सुवर्णादेः। यः खलु हाटकादेर्धर्मिणः कटकमुकुटादिधर्मरूपः परिणामः
निरूप्यमाणः हाटकादितः कटकादेरुत्पत्तिरेव पर्यवस्यतीत्यर्थः। प्रत्युत्प
वर्तमानत्वम् आदिपदादतीतत्वभविष्यत्त्वयोः परिग्रहः कटकादे
वर्तमानत्वातीतत्वभविष्यत्त्वरूपो लक्षणपरिणामोऽपि निरूप्यमाणः

## शाङ्करभाष्यम्

तन्माशङ्कीति योत्पत्तिर्ब्रह्मणस्तत्रैव स्थितिः प्रलयश्च त एव गृह्यन्ते न यथोक्तविशेषणस्य जगतो यथोक्तविशेष-

## भामती

भङ्गग्रहणमित्याह— यास्कपरिपठितानां त्विति। नन्वेवमप्युत्पत्ति-मात्रं सूच्यतां, तन्नान्तरीयकतया तु स्थितिभङ्गं गम्यत इत्यत आह योत्पत्तिर्ब्रह्मणः कारणादिति। त्रिभिरस्योपादानत्वं सूच्यते उत्पत्ति मात्रं तु निमित्तकारणसाधारणमिति नोपादं सूचयेत्। तदिदमुक्तं

## प्रकाशः

स्यर्थः। लक्षणपरिणाममुदाहरति एवमिति। भाष्ये जायतेऽस्तीत्यादीनामिति जायतेऽस्ति वर्धते परिणमतेऽपक्षीयते विनश्यतीति यास्केन निरुक्तौ षड् भाव-विकारा उक्ताः यथा वृक्षस्योत्पत्तिः ततः स्थितिस्ततो वर्धनं 'उच्छ्राय:' ततो वृद्धावस्थारूपः परिणामस्ततः शाखादेरपक्षयस्ततो विनाश इति, तेऽमी विकारा सृष्ट्यादौ जायमानानां गगनादीनां न संभवन्ति नहि गगनादयो वृद्धिमन्तो भवन्ति किंतु सृष्ट्युत्तरं जायमाना वृक्षादय एव तथा तत्कारणत्वमेव ब्रह्मणि लभ्येतानेन सूत्रेण न तु गगनादिकारणत्वमपि मूलकारणे तस्मिन् अतोऽखिलजगत् कारणत्वसंग्रहाय त्रयाणामेव ग्रहणमिति भावः। भाष्ये या उत्पत्तिर्ब्रह्मणइति ब्रह्मणः सकाशात् या जगत उत्पत्तिरित्यर्थ स्फोरयितुमाह कारणादिति उत्प-त्तिमात्रमिति। तावतैवालक्ष्यव्यावृत्तिसिद्धौ स्थितिलयोपादानमफलमित्यर्थः। नान्तरीयकतया व्यापकतया।

## विकासः

नोपादानं सूचयेदिति। ननु निमित्तकारणत्वमपि यथोर्णनाभिः सृजते गृह्णते च, कर्तारमीशं पुरुषं ब्रह्मयोनिम् 'तदैक्षत' इत्यादिश्रुतिप्रतिपाद्यमानमस्त्येव, अतएव अभिन्ननिमित्तोपादानं ब्रह्मेति सिद्धान्तोऽपि सङ्गच्छते इति चेदस्तु ईश्वरत्वेन निमित्त-कारणत्वमपि, न तत्प्रतिषेधामः परन्तूपादानत्वमपि 'यतो वे'त्यादि श्रुत्या जन्मस्थिति-लयकारणत्वोक्त्या प्रदर्श्यमानं जन्मादिसूत्रेणानेन समर्थ्यते इति।

नच लोके एकत्र कर्तृत्वमुपादानत्वञ्च न दृष्टमिति वाच्यम्, न ह्ययमर्थो लौकि-को येन लौकिकं निदर्शनमपेक्षेत, अपितु निर्णीतस्वार्थतात्पर्यकवेदैकसमधिगम्यः स च

विकासः

यथावैदिकं प्रमाणमास्थेयः, लोकेऽपि विरुद्धयोर्धर्मयोरवच्छेदकभेदेनावस्थानं न विरोधमावहति, किमङ्ग भोः ! आम्नायैकप्रतिपाद्यमाने, अतोमायोपहितस्य अधिष्ठानतयोपादानता च निरुच्यमाना न मनागपि विरोधलेशमाश्लिष्यति। नन्वेवमप्युपादानत्व सिद्धये लयाधारत्वमेव लक्षणं कुतो नाश्रि। यत्र कारणे भवति लयः कार्याणामिति चेन्मैवम्, तथासत्युपादनत्वसिद्धावपि उत्पत्तिः स्थितिश्च ब्रह्मणि वाऽन्यत्र वेति विचिकित्सा ऽवश्यमनुवर्तेत। दृश्यते हि घटादेः कुलालादिगृहादावुत्पत्तिः स्थितिश्च क्वेतुर्गृहे, ... मुपादानं श्रुतौ सूत्रे च, सति चैवं ब्रह्मण्येवावतिष्ठमानस्य नेहनानास्ति किञ्चनेत्यादि श्रुत्या निषिद्धयमानस्यान्यत्र सत्तासंभावनारहितस्य ... रोपापवादन्याय स्वस्यां प्रवेशयन्ती श्रुतिः स्वाश्रयनिष्ठात्यन्ताभावप्रति... मिथ्यात्वमपि जगतो निराबाधं साधयतीति विदन्त्येव वेदान्तसिद्धान्तमर्मज्ञाः ... त्वमधिजिज्ञासन्तः संसारासारसागरादुत्तितीर्षन्तो मोक्षमार्गमाश्रयन्तोऽद्वैतवादिनः।

भामती

तत्रैवेति। पूर्वोक्तानां कार्यकारणविशेषणानां प्रयोजनमाह—... क्तेति। तदनेन प्रबन्धेन प्रतिज्ञाविषयस्य ब्रह्मस्वरूपस्य ... संभावनोक्ता। तत्र प्रमाणं वक्तव्यम्। यथाहुर्नैयायिकाः—

प्रकाशः

नन्वनेनैव लक्षणाख्येन केवलव्यतिरेकिणा हेतुना प्रति... षयप्रमाणलाभात् शास्त्रयोनित्वसमन्वयाधिकरणयोर्वैयर्थ्यमित्याशङ्क्य ... तदनेनेति। प्रतिज्ञाविषयस्येति। ब्रह्मज्ञानाय वेदान्तविचारः कर्तव्य इति ... कप्रतिज्ञायां हि भवति ज्ञानविशेषणतया विषयो ब्रह्म। संभावना ... लक्षणं तु न ब्रह्मप्रमापकं तद्धि स्वयमेव प्रमापकमनुमानविधया ... लक्षणं हि सिद्धस्य वस्तुनः इतरस्मात् सजातीयाद्विजातीयाच्च भेदमनु... नतु लक्ष्यं साधयति अतिप्रसङ्गात्, नापि द्वितीयः कार्यं हि लिङ्गं ... मनुमापयदपि तत्कारणमेकमनेकं वेत्यत्र न प्रमाणतामासादयति ... श्रये एव च तत्र सर्वज्ञत्वं सर्वशक्तिमत्त्वञ्च सम्भवति नेतरथा ... दिसिद्ध्यर्थं लिङ्गान्तरमेवाश्रयणीयमिति भवत्येकत्वादिसाधना... णयोः सार्थक्यम्। नच केवलस्यानुमानस्यैकत्वाद्यनिर्णायकत्वेऽपि ... लाघवतर्कानुगृहीतस्य तस्यैकत्वादिनिर्णायकत्वं स्यादितिवाच्यम् ...

## शाङ्करभाष्यम्

णमीश्वरंमुक्त्वाऽन्यतः प्रधानादचेतनादणुभ्योऽभावात्संसारिणो वा उत्पत्त्यादि संभावयितुं शक्यम्। नच स्वभावतः विशिष्टदेशकालनिमित्तानामिहोपादानात्। एतदेवानुमानं संसारिव्यतिरिक्तेश्वरास्तित्वादिसाधनं मन्यन्त ईश्वरकारणिनः। नन्विहापि तदेवोपन्यस्तं जन्मादिसूत्रे न वेदान्तवाक्यकुसुमग्रथनार्थत्वात्सूत्राणाम्। वेदान्तवाक्यानि हि

## भामती

संभावितः प्रतिज्ञायां पक्षः साध्येत हेतुना।
न तस्य हेतुभिस्त्राणमुत्पतन्नेव यो हतः॥

यथा च 'वन्ध्या जननी' इत्यादिरिति।

इत्थं नाम जन्मादि संभावनाहेतुः, यदन्ये वैशेषिकादय इत एवानुमानादीश्वरविनिश्चयमिच्छन्तीति संभावनाहेतुतां द्रढयितुमाह एतदेवेति चोदयति—नन्विहापीति। एतावतैवाधिकरणार्थे समाप्ते वक्ष्यमाणाधिकरणार्थमनुवदन् सुहृद्भावेन परिहरति—न। वेदान्तेति।

## प्रकाशः

दादीनां बहुकर्तृकत्वस्य प्रायेण दृष्टत्वात् दृष्टविरुद्धस्य च तर्कस्य दुर्बलत्वेनोत्कटकोटिकसंशयरूपसंभावनामात्रसम्पादकत्वात्। नच दुर्बलस्य तर्कस्य कथमत्र संभावनापादकत्वमपीतिवाच्यम् स्वप्नविनिर्मितानां प्रासादादीनामेककर्तृकत्वस्यापि दृष्टत्वात्, तथाच दृष्टविरुद्धत्वादिभिराकुलीकृतस्तर्को न शक्नोत्येकत्वादिकं निश्चाययितुम्, अपितु श्रुतिप्रामाण्यावष्टम्भे सत्येव तथा, तस्मात्सुष्ठूक्तं लक्षणद्वारेण संभावनोक्तेति। तत्रेत्यादि संभावनायामुक्तायां सत्यामनुपदं वक्ष्यमाणाधिकरणद्वयेन प्रमाणं वक्तव्यमित्यर्थः। एतदेवेति भाष्येण युक्तीनामासां संभावनाहेतुत्वमेव दृढीक्रियते नत्वाभिर्युक्तिभिर्निश्चय इत्याह—इत्थंनामेति। सुहृद्भावेनेति उत्तराधिकरणारम्भात्प्राक् क्षणमपि शिष्याणामनुपपत्तिशंका माभूदिति कृपये-त्यर्थः। परिहरतीति। नावेदविन्मनुते तं बृहन्तम्,

शाङ्करभाष्यम्

सूत्रैरुदाहृत्य विचार्यन्ते। वाक्यार्थविचारणाध्यवसानि हि ब्रह्मावगतिर्नानुमानादिप्रमाणान्तरनिर्वृत्ता। सत्सु वेदान्तवाक्येषु जगतः जन्मादिकारणवादिषु तदर्थ दार्ढ्यायानुमानमपि वेदान्तवाक्याविरोधि प्रमाणं न निवार्यते श्रुत्यैव च सहायत्वेन तर्कस्याभ्युपेतत्वात्। हि 'श्रोतव्योमन्तव्यः. (बृह० २।४।५) इति 'पण्डितो मेधावी गन्धारानेवोपसम्पद्य तैवमेवेहाचा

भामती

वेदान्तवाक्यकुसुमग्रथनार्थतामेव दर्शयति— वेदान्त विचारस्याध्यवसानं सवासनाविद्याद्वयोच्छेदः। ततो हि वगतेर्निर्वृत्तिराविर्भावः। तत्किं ब्रह्मणि शब्दादृते न सरणीयम्, तथा च कुतो मननं, कुतश्च तदनुभवः साक्षात्कारः आह—सत्सु तु वेदान्तवाक्येष्विति अनुमानं वेदा

प्रकाशः

नैषा तर्केण मतिरापनेया, इत्यादिश्रुतेर्वेदैकसमधिगम्यत्वं ब्रह्म समाधत्ते इत्यर्थः। ननु वाक्यार्थविचारणाशब्देन उपासनासहित भिहितः परस्ताच्च तत्फलमवगतिरुक्ता मध्ये ज्ञानवचनोऽध्यवसान इत्याशंक्य नायं ज्ञानवचनोऽपि तु संस्कारसहिताविद्याविनाशवचन विचारस्येत्यादि। विचारस्याध्यवसानं चरमं फलम्, तदाह—भवा अत्राध्यवसानशब्दस्य वृत्तिरूपः साक्षात्कारस्तु नार्थः तदुत्तरक्षणे अवगतेरलाभात् मध्येऽविद्योच्छेदेन व्यवधानादिति हृदयम्। नानुमानादीति। अनुमानेन तु नात्मस्वरूपं यथावदधिगन्तु शक्य विमतं चेतनपूर्वकम् कार्यत्वादित्यादिकमनुमानं नोपेक्षणीयमित्या न्तवाक्येष्विति। पण्डितो मेधावीत्यादि। तस्य तावदेव चिर विमोक्ष्ये— अथ संपत्स्ये इत्यन्तस्य छान्दोग्योपनिषद्वाक्य

## प्रकाशः

प्रायेण भाष्यकारीयैर्वाक्यैः स्पष्टार्थकैरिह क्रियते, यथाऽयं दृष्टान्तो
वर्णितः स्वविषयेभ्यो गन्धारेभ्यः पुरुषस्तस्करैरभिनद्धाक्षोऽविवेकी
दिङ्मूढोऽशनायापिपासादिमान् व्याघ्रतस्कराद्यनेकभयानर्थव्रातयुतमरण्यं
प्रवेशितो दुःखार्तो विक्रोशन् बन्धनेभ्यो मुमुक्षुस्तिष्ठति स कथं चिदेव कारुणिकेन
केनचिन्मोचितः स्वदेशान्गन्धारानेवापन्नो निर्वृतः सुखभूत् । एवमेवायमात्मा ते
जोऽबन्नादिमयं देहारण्यं वातपित्तकफरुधिरमेदोमांसास्थिमज्जाशुक्रकृमि-
मूत्रपुरीषवत्, शीतोष्णाद्यनेकद्वन्द्वदुःखवच्चेदं मोहपटाभिनद्धाक्षो भार्या-
पुत्रमित्रपशुबन्ध्वादिदृष्टादृष्टानेकविषयतृष्णापाशितः पुण्यापुण्यादितस्करैः
प्रवेशितोऽहममुष्य पुत्रो, ममैते बान्धवाः सुख्यहं दुःखी मूढः पण्डितो धार्मिको
बन्धुमान् जातो मृतो जीर्णः पापी धनं मे नष्टं हा ! हतोऽस्मि कथं जीविष्यामि
का मे गतिः किं मे त्राणमित्यनेकशतसहस्रानर्थज्ञानवान् विक्रोशन् कथंचिदेव
पुण्यातिशयात्परमकारुणिकं कंचित्सद्ब्रह्मात्मविदं विमुक्तबन्धनं ब्रह्मिष्ठं यदाऽऽ-
सादयति—तेन च ब्रह्मविदा कारुण्याद् दर्शितसंसारविषयदोषदर्शनमार्गो विरक्तः
संसारविषयेभ्यो 'नासित्वं संसारी अमुष्य पुत्रत्वादिधर्मवान् किं तर्हि सत् यत्
तत्त्वमसीत्यविद्यामोहपटाभिनहनान्, मोचितो, गन्धारपुरुषवच्च स्वं सदात्मानमुप-
संपन्नसुखी निर्वृत इति एतमेवार्थमाह आचार्यवान् पुरुषो वेदेति तस्यैवाचार्यवतो
मुक्ताविद्याऽभिहननस्य तावानेव कालश्चिरं क्षेपः सदात्मस्वरूपसम्पत्तेरिति
वाक्यशेषः, कियान् कालश्चिरमित्युच्येत यावन्न विमोक्ष्ये विमोक्ष्यते इति पुरु-
रुषव्यत्ययेन सामर्थ्यात् येन कर्मणा शरीरमारब्धं तस्योपभोगेन क्षयाद्देहपातो
यावदित्यर्थः अथ तदैव सम्पत्स्ये सम्पत्स्यते इति पूर्ववत् नहि देहमोक्षस्य
सत्सम्पत्तेश्च कालभेदोऽस्ति येनाथशब्द आनन्तर्यार्थः स्यात् । ननु यथा सद्वि
ज्ञानानन्तरमेव देहपातः सत्सम्पत्तिश्च न भवति कार्यशेषवशात् तथाऽप्रवृत्तफला-
नि प्राग् ज्ञानोत्पत्तेः जन्मान्तरसञ्चितान्यपि कर्माणि सन्तीति तत्फलोपभोगार्थं
पतितेऽस्मिन् शरीरे शरीरान्तरमारब्धव्यम् । उत्पन्ने ज्ञाने यावज्जीवं विहितानि
प्रतिषिद्धानि वा कर्माणि करोत्येवेति तत्फलोपभोगार्थं चावश्यं शरीरान्तरमा-
रब्धव्यं ततश्च कर्माणि, ततः शरीरान्तरमिति ज्ञानानर्थक्यं कर्मणां फलवत्त्वात् ।
अथ ज्ञानवतः क्षीयन्ते कर्माणि तदा ज्ञानप्राप्तिकालमेव ज्ञानस्य सत्सम्पत्ति
हेतुत्वान्मोक्षः स्यादिति शरीरपातः स्यात् तथा चाचार्याभाव इति, न ब्रह्मज्ञानिन
आचार्यस्याभावात् आचार्यवान् पुरुषो वेदेत्यनुपपत्तिः ज्ञानान्मोक्षाभावप्रसङ्गश्च;

### प्रकाशः

देशान्तरप्राप्त्युपायज्ञानवदनैकान्तिकफलत्वं वा ज्ञानस्य, न कर्मणां प्रवृत्तफलवत्तत्रविशेषोपपत्तेः, यदुक्तमप्रवृत्तफलानां कर्मणां प्रवृत्त ब्रह्मविदः शरीरे पतिते शरीरान्तरमारब्धव्यमप्रवृत्तकर्मफलोपभोग एतदसत् विदुषस्तस्य तावदेव चिरमिति श्रुतेः प्रामाण्यात्। प्रवृत्तकर्म णामुपभोगेनैव क्षयः अप्रवृत्तफलानां तु ज्ञानान्नाशोऽग्रेऽनुत्पादश्च, पुण्यो वै पुण्येन कर्मणा भवतीत्यादि श्रुतेरपि प्रामाण्यमेव तथा चाप्रे स्याताम्, सत्यमेवम्, तथाऽपि प्रवृत्तफलानामप्रवृत्तफलानाञ्च कर्मणां रित, कथम् यानि प्रवृत्ति फलानि कर्माणि यैर्विद्वच्छरीरमारब्धं तेषामु क्षयः यथाऽऽरब्धवेगस्य लक्ष्यमुक्तेष्वादेर्वेगक्षयादेव स्थितिः न तु समकालमेव प्रयोजनं नास्तीति तद्वत्, अन्यानि त्वप्रवृत्तफलानि प्राग् रूर्ध्वं च कृतानि वा क्रियमाणानि वाऽतीतजन्मान्तरकृतानि वाऽप्रवृत्त ज्ञानेन दह्यन्ते प्रायश्चित्तेनेव, 'ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते स्मृतेश्च 'क्षीयन्ते चास्य कर्माणीति चाथर्वणे' अतो ब्रह्मविदो जताभावेऽपि प्रवृत्तफलानां कर्मणामवश्यमेव फलभोगः स्यादिति 'तस्य तावदेवचिरम्' इति युक्तमेवोक्तमिति यथोक्तदोषचोदनानुपपत्तिः

### शाङ्करभाष्यम्

पुरुषोवेद, (छान्दो० ६।१४।२) इति च पुरुषबुद्धिसाहाय्य मात्मनो दर्शयति न धर्मजिज्ञासायामिव श्रुत्यादय प्रमाणं ब्रह्मजिज्ञासायाम् किंतु श्रुत्यादयोऽनुभवादय यथासंभवमिह प्रमाणम् अनुभवावसानत्वाद्भूतवस्तु त्वाच्च ब्रह्मज्ञानस्य। कर्तव्ये हि विषये नानुभवापेक्षा

### भामती

तदुपजीवि चेत्यपि द्रष्टव्यम्। शब्दाविरोधिन्या तदुपजीविन्या युक्त्या विवेचनं मननम्। युक्तिश्चार्थापत्तिरनुमानं वा। स्यादेतत् धर्मे न पुरुषबुद्धिसाहाय्यम्, एवं ब्रह्मण्यपि कस्मान्न भवतीत्यत

## भामती

न धर्मजिज्ञासायामिवेति, श्रुत्यादय इति। श्रुतीतिहासपुराणस्मृतयः प्रमाणम्। अनुभवोऽन्तःकरणवृत्तिभेदो ब्रह्मसाक्षात्कारस्तस्याविद्यानिवृत्तिद्वारेण ब्रह्मस्वरूपाविर्भावः प्रमाणफलम्। तच्च फलमिव फलमिति गमयितव्यम्। यद्यपि धर्मजिज्ञासायामपि सामग्र्यां प्रत्यक्षादीनां व्यापारस्तथापि साक्षान्नास्ति, ब्रह्मजिज्ञासायां तु साक्षादनुभवादीनां संभवोऽनुभवार्था च ब्रह्मजिज्ञासेत्याह—**अनुभवावसानत्वात्**। ब्रह्मानुभवो ब्रह्मसाक्षात्कारः परमपुरुषार्थः, निर्मृष्टनिखिलदुःखपरमानन्दरूपत्वादिति। ननु भवतु ब्रह्मानुभवार्था जिज्ञासा, तदनुभव

### प्रकाशः

भाष्ये—**पुरुषबुद्धिः** मननम् आत्मनः स्वस्याः। ब्रह्मणो मानान्तराविषयत्वे कुतो मननमित्यतआह—**शब्दाविरोधिन्येति**। सामान्यतः कारणमात्रं सम्भावयन्ती युक्तिः न कारणस्य सर्वज्ञत्वैकत्वादिसिद्धौ स्वतन्त्रा, अपि तु, तत्र शब्दमपेक्षत इत्यर्थः। भाष्यस्थानुभवशब्दस्यार्थमाह—**अनुभव** इत्यादि। ननूक्तवृत्तेः कथं प्रमाणत्वं सम्भवति? प्रमाणस्य हि फलं प्रमा भवति न च वृत्त्यात्मकस्य साक्षात्कारस्यास्ति किञ्चित्फलं प्रमेत्याशङ्क्य तत्कृताविद्यानिवृत्तिद्वारा स्वरूपाभिव्यक्तिरौपचारिकं फलमस्तीत्याह—**तस्याविद्येति**। ननु धर्मजिज्ञासायां श्रुत्यादय एव प्रमाणमिति भाष्योक्तमनुपपन्नं वेदस्य श्रोत्रेन्द्रियजन्यप्रत्यक्षविषयत्वेन श्रोत्रस्यापि प्रमाणस्यापेक्षणादित्याशङ्क्य शब्दमहणे श्रोत्रस्यापेक्षणेऽपि तदर्थस्य धर्मस्य यागादेः श्रोत्रेन्द्रियाग्राह्यस्य ज्ञानं न साक्षात् श्रोत्रमपेक्षतेऽतस्तत्र श्रुत्यादय एव मानम्, ब्रह्मजिज्ञासा तु साक्षात्कारपर्यन्ताऽभिमताऽतस्तदुपयोगिनीं युक्तिमियमपेक्षत इत्याह—**यद्यपीत्यादिना**। न केवलं ब्रह्मजिज्ञासायामनुभवादीनां सम्भव एवापितु अपरोक्षसंसारभ्रमनिवर्तकेन ब्रह्मसाक्षात्कारेण विना जिज्ञासाया अपर्यवसानं चेत्याह—**अनुभवार्थेति**। भाष्ये—**अनुभवावसानत्वादिति**। अनुभवोऽवसाने समाप्तौ फलत्वेन यस्याः साऽनुभवावसाना तस्या भावस्तत्त्वम्। ब्रह्मजिज्ञासायामिति पूर्वोक्तसनम्यन्तं पदमिहानुवर्त्तमानं षष्ठ्यन्तत्वेन विपरिणमय्य अनुभवावसानत्व द्

भामती

एव त्वशक्यः, ब्रह्मणस्तद्विषयत्वायोग्यत्वादित्यत आह-भूतवि
षयत्वाच्च ब्रह्मविज्ञानस्य व्यतिरेकसाक्षात्कारस्य विरु
विषयविषयिभावः, नत्वेवं धर्मज्ञानमनुभवावसानं, तदनुभव
मपुरुषार्थत्वात्, तदनुष्ठानसाध्यत्वात् पुरुषार्थस्य, अनुष्ठानस्य च
प्यनुभवं शाब्दज्ञानमात्रादेव सिद्धेरित्याह-कर्तव्ये हीत्यादि

प्रकाशः

ब्रह्मजिज्ञासायाः भूतविषयत्वाच्च ब्रह्मज्ञानस्येत्येवमत्र योजनीयम्। ब्रह्म
स्थानुभवपदस्य ब्रह्मस्वरूपानुभवार्थकत्वमाह—ब्रह्मानुभव इति। तत्
माह निर्मृष्टेति। फलमेव हि निरुपाधीच्छाविषयः, फलत्वं तत्
मात्रेण बोध्यम्। तदनुभव एव त्विति। अत्र प्रस्तुतोऽपि ब्रह्म
नं विवक्षितः ब्रह्मणस्तद्विषयत्वशङ्कासमाधानयोरसङ्गतत्वापत्तेरतो वृत्ति
नुभव एव त्वशक्य इत्यर्थो बोध्यः। एवकारेण च तत्कृताविद्या
स्वरूपाभिव्यक्तिस्तु दूरतरेति सूचितम्। तद्विषयत्वेति वृत्तिविषय
भाष्ये-भूतवस्त्विति। अत्र भूतशब्दः पारमार्थिकार्थः, चकारः शङ्का
व्यतिरेकसाक्षात्कारस्येति। अत्र व्यतिरेकपदस्य प्रपञ्चाभाव
रूपमर्थः। तादृशब्रह्मविषयकसाक्षात्कारस्य वृत्तिरूपस्य ब्रह्मणा सह वि
'आध्यासिकम्' विषयत्वं न तु तात्त्विकम्, तावत्कालपर्यन्तं ब्रह्मणः
त्वेन काल्पनिकधर्मसत्त्वे बाधकाभावात्। तदेतत्प्रथमसूत्रे वृत्ति
तयैवोपहितस्य न निरुपाधेरिति प्रतिपादितम्। यदपि कैश्चिदुक्तम्
मेवास्य शास्त्रकृद्भिर्निवारितम्, ब्रह्मण्यज्ञाननाशार्थं वृत्तिव्याप्यत्व
तदपि वृत्तिव्याप्यत्वं वृत्तिविषयत्वरूपं भामतीकृन्मते वृत्त्युपहितस्यैव
नतु शुद्धस्य। उक्तश्लोके-फलव्याप्यत्वमिन्द्रियजन्यवृत्त्यभिव्यक्तचैतन्य
तद्घटादावेव न ब्रह्मणि चैतन्ये चैतन्यविषयत्वासंभवात् चैतन्य
बोध्यम्। 'अन्यथा कर्त्तुमिति भाष्ये कर्त्तुमित्यस्याध्याहारः कार्यः
हि अन्यथाकरणं भवति, तथाच कर्म कर्त्तुं तत् कर्म अन्यथा कर्त्तुं
द्वितीयविकल्पार्थः। एतदभिप्रेत्याह—कर्त्तुमन्यथा वेति। उदिते
इति विधिप्राप्त उदितकालीनो होमः कर्तुं शक्यः, 'अनुदिते जुहोति'
विहितः समयान्तरे क्रियमाण उदितकालीनहोमापेक्षयाऽन्यथा भवती

शाङ्करभाष्यम्

श्रुत्यादीनामेव प्रामाण्यं स्यात्, पुरुषाधीनात्मलाभत्वाच्च कर्तव्यस्य कर्त्तुमकर्त्तुमन्यथा वा कर्त्तुं शक्यं लौकिकं वैदिकं च कर्म, यथाऽश्वेन गच्छति, पद्भ्यामन्यथा वा न वा गच्छतीति तथा 'अतिरात्रे षोडशिनं गृह्णाति' नातिरात्रे षोडशिनं गृह्णाति । 'उदिते जुहोत्यनुदिते जुहोति' इति विधिप्रतिषेधाश्चात्रार्थवन्तः स्युः,

भामती

न चायं साक्षात्कारविषयतायोग्योऽपि अवर्तमानत्वात्, अवर्तमानश्चानवस्थितत्वादित्याह– पुरुषाधीनेति । पुरुषाधीनत्वमेव लौकिकवैदिककार्याणामाह–कर्तुमकर्तुमिति । लौकिकं कार्यमनवस्थितमुदाहरति– यथाऽश्वेनेति । लौकिकेनोदाहरणेन सह वैदिकमुदाहरणं समुच्चिनोति–तथाऽतिरात्र इति । कर्तुमकर्तुमित्यस्येदमुदाहरणमुक्तम् । कर्तुमन्यथा वा कर्तुमित्यस्योदाहरणमाह--उदित इति । स्यादेतत्, पुरुषस्वातन्त्र्यात् कर्तव्ये विधिप्रतिषेधानामानर्थक्यम्, अतदधीनत्वात् पुरुषप्रवृत्तिनिवृत्त्योरित्यत आह--विधिप्रतिषेधाश्चात्रार्थवन्तः स्युः गृह्णातीति विधिः । न गृह्णातीति प्रतिषेधः । उदितानुदितहोमयोर्विधी । एवं नारास्थिस्पर्शननिषेधो ब्रह्मघ्नश्च तद्धारणविधिरित्येवंजातीयका

प्रकाशः

कार्यध्यादिशब्दान् तदुदाहृतवाक्येषु योजयति–गृह्णातीतिविधिरिति । विधिप्रतिषेधाश्चेति भाष्योक्तबहुवचनप्रयोगमुपपादयितुं पुनर्विधिद्वयं योजयति— उदितानुदितहोमयोर्विधी इति । उदिते जुहोति, अनुदिते जुहोति' इति विधी एकश्च विधिर्भाष्ये कण्ठत एवोक्तो मिलित्वा बहुवचनमुपपन्नम् । अत्रार्थवन्त इति भाष्ये अत्रेतरस्य कर्मणः पुरुषाधीनात्मलाभत्वे इत्यर्थः । नारास्थीत्यादि ।

शाङ्करभाष्यम्

विकल्पोत्सर्गापवादाश्च । न तु वस्तु—एवं नैवं नास्तीति विकल्प्यते, विकल्पनास्तु पुरुषबुद्ध्यपेक्षाः।

भामती

विधिप्रतिषेधा अर्थवन्तः, कुत इत्यत आह—विकल्पोत्सर्गापवादाश्च । चो हेतौ। यस्माद् ग्रहणाग्रहणयोरुदितानुदितहोमयोश्च ... समुच्चयासम्भवे तुल्यबलतया च बाध्यबाधकभावाभावे ... विकल्पः, नारास्थिस्पर्शननिषेधतद्धारणयोश्च विरुद्धयोरतुल्यबलतया विकल्पः, किन्तु सामान्यशास्त्रस्य स्पर्शननिषेधस्य धारणविधि... विशेषशास्त्रेण बाधः। एतदुक्तं भवति— विधिप्रतिषेधैरेव स ... विषयोऽनागतोत्पाद्यरूप उपनीतो येन पुरुषस्य विधिनिषेधापेक्षयोः निवृत्त्योरपि स्वातन्त्र्यं भवतीति। भूते वस्तुनि तु नेयमस्ति ... त्याह—न तु वस्त्वेवं नैवमिति। तदनेन प्रकारविकल्पो ...

प्रकाशः

"नारं स्पृष्ट्वाऽस्थि सस्नेहं सवासा जलमाविशेत्"।
इति नारास्थिस्पर्शन निषेधः।
"शिरः कपाली ध्वजवान् भिक्षार्थी कर्म वेदयन्।
ब्रह्महा द्वादशाब्दानि मितभुक् शुद्धिमाप्नुयात्॥"

इति ( याज्ञवल्क्य ३ अ० २४३ श्लोकः ) ब्रह्मघ्नः शवशिरसो ... ध्वजत्वेन धारणविधिः। अत्र विधिप्रतिषेधाश्चेत्यादियथाभुतभाष्यात् ... प्रतीयते न तु हेतुरुक्तोऽतो विकल्पेत्यादिभाष्यं हेतुपरत्वेन व्याचिख्यासु... कुत इति। भाष्यान्तरेणैवैतस्य हेतुपरत्वमाह— चो हेताविति। ... बाधं इति। तस्माद्विधिप्रतिषेधा अर्थवन्त इति वाक्यशेषः। ननु भवतु ... प्रदर्शिता विधिप्रतिषेधा विकल्पोत्सर्गापवादरूपाः, नच तावता तेषामानर्थक्यं ... परिहृतेत्यतो भाष्यभावमाविष्करोति–एतदुक्तं भवतीति। उपनीतः ... विधिनिषेध... स्वातन्त्र्यं भवतीति। अयमाशयः—सन्तु नाम ... क्रिययोरुत्पादने स्वतन्त्रा एव पुमांसः किन्तु किं ... चानिष्टमिति स्वयमजानन्तो विना शास्त्रं लौकिकेष्वेव तेषु ...

### शाङ्करभाष्यम्

वस्तु याथात्म्यज्ञानं पुरुषबुद्ध्यपेक्षम्। किं तर्हि वस्तुतन्त्रमेव तत् । नहि स्थाणावेकस्मिन् स्थाणुर्वा पुरुषोऽन्यो वेति तत्त्वज्ञानं भवति। तत्र पुरुषोऽन्योवेति मिथ्याज्ञानम्। स्थाणुरेवेति तत्त्वज्ञानं, वस्तुतन्त्रत्वात्। एवं भूतवस्तुविषयाणां

### भामती

प्रकारिविकल्पं निषेधति—अस्ति नास्तीति। स्यादेतत्—भूतेऽपि वस्तुनि विकल्पो दृष्टः, यथा स्थाणुर्वा पुरुषो वेति, तत्कथं न वस्तु विकल्प्यत इत्यत आह—विकल्पनास्त्विति । पुरुषबुद्धिरन्तःकरणम्, तदपेक्षा विकल्पनाः संशयविपर्यासाः, सवासनमनोमात्रयोनयो वा यथा स्वप्ने, सवासनेन्द्रियमनोयोनयो वा यथा स्थाणुर्वा पुरुषो वेति स्थाणौ संशयः, पुरुष एवेति वा विपर्यासः, अन्यशब्देन वस्तुतः स्थाणोरन्यस्य पुरुषस्याभिधानात्, न तु पुरुषतत्त्वं वा स्थाणुतत्त्वं वाऽपेक्षन्ते समानधर्मधर्मिदर्शनमात्राधीनजन्मत्वात्। तस्मादयथावस्तवो विकल्पना न वस्तु विकल्पयन्ति वाऽन्यथयन्ति वेत्यर्थः। तत्त्वज्ञानं त न बुद्धितन्त्रं

### प्रकाशः

प्रवर्त्तमाना निवर्त्तमानाश्च नाभिलाषोपनीतं पारलौकिकमैहिकं वा सुखमुपलब्धुमर्हन्ति, शास्त्रेण तु तथा तथोपस्थाप्यन्ते कर्माणि विहितानि प्रतिषिद्धानि च येषु स्वतन्त्राः सन्तोऽपि पुमांसो यदा कदाचिदपि प्रवर्त्तमाना निवर्त्तमानाश्चेष्टं प्राप्नुवन्ति नाप्नुवन्ति चानिष्टमिति न वैयर्थ्यमागमस्येवि, नहि गमनादौ स्वतन्त्रा अपि कदाचिदपि ग्रामं न गच्छन्तीति। स्वाप्नजाग्रद्भेदेन कल्पना द्वैविध्यमाह—सवासनेति। जाग्रद्वासनावासितं 'जाग्रत्संस्कार सहितं' मन एव स्वाप्नकारणम्, जाग्रत्संशयविपर्ययाश्च संस्कारसहितान्तर्बहिःकरणजन्या इत्यर्थः। यत्र यादृशविशिष्टविषयकोऽनुभवो नोत्पन्नः (यथा वृक्षाद्यात्मकस्य मनुष्यादेः) तत्र तादृशविशिष्टविषयकसंस्काराभावेऽपि वृक्षविषयको मनुष्यादिविषयकश्च यो यस्तत्तत्प्रत्येकानुभवस्तत्तज्जन्येनैहिकेन जन्मान्तरीयेण वा तत्तत् संस्कारेण विशिष्टं मनः स्वप्ने

शाङ्करभाष्यम्

प्रामाण्यं वस्तुतन्त्रम् । तत्रैवं सति ब्रह्मज्ञानमपि व- न्त्रमेव; भूतवस्तुविषयत्वात् । ननु भूतवस्तुत्वे ब्र- प्रमाणान्तरविषयत्वमेवेति वेदान्तवाक्यविचारणा- कैव प्राप्ता न इन्द्रियाविषयत्वेन सम्बन्धाग्रहण- स्वभावतो विषयविषयाणीन्द्रियाणि न ब्रह्मविषया-

भामती

किन्तु वस्तुतन्त्रमतस्ततो वस्तुविनिश्चयो युक्तो, न तु विकल्पना- न वस्तुयाथात्म्येति । एवमुक्तेन प्रकारेण भूतवस्तुविषयाणां ज्ञा- प्रामाण्यस्य वस्तुतन्त्रतां प्रसाध्य ब्रह्मज्ञानस्य वस्तुतन्त्रतामाह- सतीति । अत्र चोदयति-ननु भूतेति । यत् किल भूतार्थं तत्प्रमाणान्तरगोचरार्थतयाऽनुवादकं दृष्टम्, यथा नद्यास्तीरे सन्तीति, तथा च वेदान्ताः, तस्माद्भूतार्थतया प्रमाणान्तर- मनुवदेयुः । उक्तं च ब्रह्मणि जगज्जन्मादिहेतुकमनुमानं प्रमाणा- एवं च मौलिकं तदेव परीक्षणीयं, न तु वेदान्तवाक्यानि तदु- त्वानीति कथं वेदान्तवाक्यग्रथनार्थता सूत्राणामित्यर्थः । परिह- इन्द्रियाविषयत्वेति । कस्मात्पुनर्नेन्द्रियविषयत्वं प्रतीच इत्यत

प्रकाशः

विशिष्टानुभवं जनयतीत्यवगन्तव्यम्, अतएव च जीवितस्य यस्य पुंसो येन भवो न जात सो पि स्वप्ने तदीयमरणं पश्यतीति नानुपपन्नम् । अन्यो पाततःसंशयः प्रतीयते परंतु 'स्थाणुर्वा पुरुषोवा' इत्येकस्य संशयस्य प्रथम- पुनःसंशयस्यैवाभिधानमनर्थकं स्यादतो वाकारं पृथक्कृत्य विपर्यासपर- व्याचष्टे—पुरुष एव वेति । भाष्यस्थस्यान्यशब्दस्य पुरुषः कुतो- अन्यशब्देनेति । तथा च पुरुषोऽन्योवेति भाष्यस्य पुरुषो अपेक्षन्त इति । विकल्पना इति पूर्वेणान्वयः । अयथावस्तव इति ।

### शाङ्करभाष्यम्

सति हीन्द्रियविषयत्वे ब्रह्मणः, इदं ब्रह्मणा सम्बद्धं कार्यमिति गृह्येत । कार्यमात्रमेव तु गृह्यमाणं किं ब्रह्मणा सम्बद्धम्, किमन्येन केनचिद्वा सम्बद्धमिति न शक्यं

### भामती

स्वभावत इति । अत एव श्रुतिः--

'पराञ्चि खानि व्यतृणत् स्वयम्भूस्तस्मात्पराङ् पश्यति नान्तरात्मन्, इति।

**सति हीन्द्रियेति** । प्रत्यगात्मनस्त्वविषयत्वमुपपादितम् । यथा च सामान्यतो दृष्टमप्यनुमानं ब्रह्मणि न प्रवर्त्तते तथोपरिष्टान्निपुणतरमुपपादयिष्यामः । उपपादितं चैतदस्माभिर्विस्तरेण न्यायकणिकायाम् । न च भूतार्थतामात्रेणानुवादतेत्युपरिष्टादुपपादयिष्यामः । तस्मात्सर्व-

### प्रकाशः

वस्तुत्वं वस्त्वनुसारित्वं यासां नास्ति तास्तथोक्ताः वस्त्वनुसारित्वाभाववत्य इत्यर्थः । न वस्त्विति । संशया न वस्तुस्वरूपं विकल्पयन्ति विपर्यासा नान्यथयन्तीत्यर्थः । तत्त्वज्ञानम् प्रमात्मकं ज्ञानम्, न बुद्धितन्त्रम् न केवलं बुद्धितन्त्रं न मनः कल्पितमित्यर्थः । वस्तुतन्त्रमिति । अयमाशयः- 'अयं घट' इत्यादियथार्थप्रत्यक्षं चक्षुरादिसन्निकर्षाज्जायमानं स्वरूपतो घटादिकं भासयति । संशयविपर्ययौ तु न वस्तुस्वरूपं गोचरयतः विषयस्य पृथक्त्वेन करणासम्बन्धात् किन्तु संस्कारादिकारणसामग्रीसहकृता बुद्धिः वस्तुस्वरूपं संनिकर्षं चानादृत्य रजताद्याकार मनुभवंजनयतीत्यतो न तद्रजतं सिद्धं वस्तु अतश्च न सिद्धवस्तुविषयकौ 'वस्तुतन्त्रौ, संशयविपर्ययौ भवतः तदेतदुक्तं भाष्यकारैः—'विकल्पनास्तु पुरुषबुद्ध्यपेक्षाः' इति । न बुद्धितन्त्रम् न केवल मनः कल्पितम् पराञ्चीति खानि इन्द्रियाणि व्यतृणत् हिंसितवान् पराङ् अतः बाह्यं घटादिकमिन्द्रियेण लोकः पश्यति नान्तरात्मानम् । नन्वियं श्रुतिः 'कश्चिद्धीरः प्रत्यगात्मानमैक्षदावृत्तचक्षुरमृतत्वमिच्छन्' इति विद्वदिन्द्रियाविषयत्वाभिधायिना उत्तरार्धेन 'मनसैवेदमाप्तव्यम्'इत्यादिना श्रुत्यन्तरेण च विरोधमावहतीति चेन्न. सगुणनिर्गुणभेदेन ग्राह्यत्वाग्राह्यत्वयोः सत्त्वेन विरोधविरहात् तदेवदाह—प्रत्यगात्मनस्त्वविषयत्वमुपपादितमिति । अपरोक्षत्वाच्च प्रत्यगात्मप्रसिद्धेरित्यत्रोपहितस्य मनोविषयत्वेऽपि शुद्धस्याविषयत्वमुपपादितमित्यर्थः । उपरिष्टात् तर्कपादे । न्यायकणिकायामिति ।

### शाङ्करभाष्यम्

निश्चेतुम् । तस्माज्जन्मादिसूत्रं नानुमानोपन्यासार्थं
तर्हि ? वेदान्तवाक्यप्रदर्शनार्थम् । किं पुनस्तद्वेदान्त
यत्सूत्रेणेह लिलक्षयिषितम् । 'भृगुर्वै वारुणिः वरुणं
पससार अधीहि भगवो ब्रह्म इत्युपक्रम्याह यतो वा इ
भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसं
तद्विजिज्ञासस्व तद्ब्रह्म इति'(तैत्ति० ३।१) तस्य च नि

### भामती

मवदातम् । श्रुतिश्च यतो वेति जन्म दर्शयति, 'येन जातानि जी
ति जीवनं स्थितिं, 'यत्प्रयन्ति' इति तत्रैव लयम् । तस्य च नि

### प्रकाशः

इत्थमत्र तत्रोक्तं संक्षेपेण संगृह्यते—'विमतं धीमत्कर्तृकं कार्यत्वा
मानं नेश्वरं साधयितुं क्षमते कल्पैर्महायोगिभिः अदृष्टद्वारा जीवमात्रेण
त्पत्तिसम्भवेन सिद्धसाधनात् । अपि च धीमत्कर्तृकत्वं साधयेत्
कीदृशीं धियमीश्वरे साधयेत् नित्यामनित्यां वा ? नाद्यः, त्वन्मते
धीमत्कर्तृकत्वव्याप्तिस्तथा ज्ञानत्वे जन्यत्वव्याप्तिरप्यकामेनानु
तद्विरोधेन ज्ञाननित्यत्वासिद्धेः । नापि द्वितीयः-मनःसंयोगादिकं
विना ईश्वरे ज्ञानोत्पत्त्यसम्भवात् । यदि विनापि कृमकारणमैश्वर्यवशा
ज्ञानमुपेयेत तदा विनाऽपि ज्ञानमैश्वर्यवशादेव स्रष्टृत्वसंभवेन स्वर्ग
सिद्धस्तस्मात् शब्द एवेश्वरे मानमिति । उपरिष्टात् समन्वयसूत्रे
जन्मादिसूत्रेण 'यतो वेत्यादिश्रुतिवाक्यं लक्ष्यते इति भाष्ये उक्तमर्थं
योरैकार्थ्यं प्रदर्शयति-श्रुतिश्चेति । आकाशादेर्जीवनासंभवादाह-जीवनं
मिति । प्रधानादिसंशये निर्णयवाक्यमिति ; नन्विदमनुपपन्नम्
तो नामरूपाभ्यां व्याकृतस्य इत्यादिना जगतो विशेषणान्युक्त्वा 'न
विशेषणस्य जगत' इत्याद्युत्तरग्रन्थेन प्रधानादिविलक्षणस्येश्वरस्य
दिदानीं संशयानुत्थानादिति चेन्न, तत्रापि हि सम्भावनामात्रं दर्शितम्
तु निर्णायिका सा पूर्वं न दर्शिताऽतः सा सम्प्रति प्रदर्श्यते भाष्यकारैः

## शाङ्करभाष्यम्

वाक्यम्—आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते, आनन्देन जातानि जीवन्ति, आनन्दं प्रयन्त्यभिसंविशन्तीति' (तैत्ति ३।६)। अन्यान्यप्येवं जातीयकानि वाक्यानि नित्यशुद्धबुद्धमुक्तस्वभावसर्वज्ञस्वरूपकारणविषयाण्युदाहर्त्तव्यानि ॥२॥ इति द्वितीयं जन्माधिकरणम् ॥

## भामती

वाक्यम्। अत्र च प्रधानादिसंशये निर्णयवाक्यम् 'आनन्दाद्ध्येवेति। एतदुक्तं भवति। यथा रज्ज्वज्ञानसहितरज्जूपादाना धारा रज्ज्वां सत्यामस्ति रज्ज्वामेव च लीयते, एवमविद्यासहितब्रह्मोपादानं जगद् ब्रह्मण्येवास्ति तत्रैव च लीयते इति सिद्धम्।।२॥ इति द्वितीयं जन्माधिकरणम्

## प्रकाशः

नन्वद्वितीयस्य ब्रह्मणो जगज्जन्मादिकारणत्वमनुपपन्नं तदा ह कारणान्तरनैरपेक्ष्येण एकस्मादनादिनो ब्रह्मणो जायमानानां कार्याणामनादित्वप्रसङ्ग इत्याशङ्कां दृष्टान्तप्रदर्शनपूर्वकं परिजिहीर्षुराह-एतदुक्तं भवतीति। विविधशक्तिसम्पन्नाऽघटितघटनापटीयसनाद्यविद्येव ब्रह्मविपर्यिणी तत्तदाकारेण परिणममानाऽदृष्टकालादिसहकारिणी सर्वं सम्पादयति ब्रह्म तु अविद्याविषयत्वेनाधिष्ठानतया कारणमुच्यतेऽतो न कार्याणामनादित्वप्रसङ्ग इत्यर्थः। अविद्यासहितब्रह्मोपादानमिति। अत्राविद्यासाहित्यस्य ब्रह्मविशेषणत्वोक्त्या उभयमेवोपादानमभिमतम्, तत्र परिणामितयाऽविद्या, अविद्याविषयत्वेनाधिष्ठानतया तु ब्रह्म, अतो 'निर्विचिकित्सेऽनाद्यविद्योपादानदेहाद्यतिरिक्तप्रत्यगात्मतत्त्वावबोधे' इत्यनेन प्रथमसूत्रोक्तेन भामतीग्रन्थेन न विरोधः, नवा 'सर्वं हि विकारजातं तदविद्याशक्तिपरिणाम' इति 'अन्तर्याम्यधिदैवादिषु' इति सूत्रे वक्ष्यमाणेन विरोध इति बोध्यम्। तत्रैव च लय इति। अविद्यायां लीनस्य सत इति शेषः। अविद्यायां हि अशेषमेव जगल्लीयते प्रलयकाले, सृष्ट्यादौ च तस्या एवाविद्यायाः सकाशादाविर्भवति न त्वविद्याया स्तदानीं लयः मोक्षदशायां तु अविद्याऽपि लीयते ब्रह्मणीत्यर्थः, नातोऽविद्यायां लयं प्रतिपादयन्त्या 'समाननामरूपत्वात्' इति सूत्रे वक्ष्यमाणया भामत्या विरोध इति शिवम्।

इति द्वितीयसूत्रप्रकाशः समाप्तः। साम्बशिवार्पणमस्तु।

## विकासः

भाष्ये—आनन्दाद्धयेवेति। नन्वेतस्माच्छ्रुतिवाक्यात् आनन्दो ब्रह्म लक्षणम्, एवं 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यादिवाक्यात् सत्यादिकमपि लक्षणं परं सत्यज्ञानानन्दादयः ब्रह्मस्वरूपात्परस्परस्माच्च भिद्यन्ते तदा कथमेते ब्रह्मणः लक्षणं भजेयुः नहि एकं वस्तु अनेकस्वरूपतां प्रतिपद्यते। यदि च न भिद्यन्ते तदा मनन्तं ब्रह्म इति वाक्यार्थासिद्धिः, गुणभूतपदार्थविशिष्टः प्रधानपदार्थो हि वाक्यार्थः 'दण्डी पुरुष' इति चेन्न, द्विविधं हि वाक्यस्य प्रामाण्यं विशिष्टार्थबोधकत्वेन च, तत्र यः पदार्थः प्रमितः स एवेतरपदार्थविशिष्टः शक्यते अभिधातुम्, यथा 'नीलो घट' इति। यस्त्वज्ञातः स नान्यैः पदैः विशेष्टुम् असंभवात्, प्रकृते चाज्ञाते ब्रह्मण्येव वाक्यस्य पर्यवसानाद् विशिष्टार्थे वाक्यस्य प्रामाण्यविरहेऽपि तत्र अज्ञातज्ञापकत्वेन प्रामाण्यं को निवारयितुमीष्टे चैकस्मिन् पदार्थ एव यत्र वाक्यस्य समाप्तिर्न तत्र विशिष्टपरत्वमतोऽपि न ब्रह्मणोऽज्ञातत्वमेवासिद्धम् 'आनन्दाद्धयेव'इति स्वरूपलक्षणवाक्येन ब्रह्म स्वाभिधानेन ब्रह्मणो ज्ञातत्वात् अज्ञातस्यानुवादत्वासम्भवादिति वाच्यम्, 'अथ ब्रह्म' इति प्रश्नसमये प्रातिपदिकार्थतया ज्ञातमपि हि ब्रह्म परमाणुप्रधान रूपेण जगदधिष्ठानत्वादिना च न ज्ञातमतो भवति ब्रह्म अज्ञातम्। एवञ्च त्वेनानुवाद्यत्वमपि सम्भवत्येवेति तदनूद्यानन्दरूपताभिधानमप्युपपन्नमेव, यथा इति प्रश्नस्य 'प्रकृष्टप्रकाशश्चन्द्र' इत्युत्तरवाक्ये प्रकृष्टप्रकाशशब्दौ स्वयं तात्पर्यवशात् बुभुत्सितं चन्द्रस्वरूपं लक्षयतः चन्द्रस्वरूपमात्रस्य बुभुत्सितत्वात् ततश्च प्रकृष्टत्वं प्रकाशत्वं च न स्वरूपमात्रावगाहिनि वाक्यार्थबोधेऽनुप्रविशतः तयोरवगतत्वात् अबुभुत्सितत्वाच्च, निर्विकल्पचन्द्रस्वरूपबोधोपायतयैव प्रकृष्ट तथाऽत्रापि सर्वमवगन्तव्यम् निर्विकल्पकबोधस्यैवाभिमतत्वात्।

एतेन 'सत्यं विज्ञानमानन्दं ब्रह्म' इत्यत्रएकेन पदेन यदभिधीयते तस्यैव पदेनाभिधाने पदानां पर्यायत्वं ततश्च पदान्तरवैयर्थ्यम्, अधिकाभिधानेन वाक्यार्थत्वापत्त्या बोधस्य निर्विकल्पकत्वक्षतिरित्यपास्तम्, शक्यतावच्छेदकभेदेन ज्ञानादिपदानां पर्यायताविरहात्, तेन तेन च रूपेण वाच्यार्थस्य नानात्वेऽपि ऐक्येन क्षतेरेव क्षतेः। ननु सत्यज्ञानादीनां यत्किञ्चिदपि ब्रह्मणः सकाशाद् भेदः लक्ष्यलक्षणभाव इति चेद्? अस्त्येवाविद्याकल्पितो भेद इति न काचिदनुपपत्तिः मत्र कल्पतरुपरिमलयोर्द्रष्टव्यम्। यथाच 'प्रकृष्टप्रकाशश्चन्द्र' इत्यादिविशिष्ट जायमानस्य निर्विकल्पज्ञानस्य अयं चन्द्रो नवा नायं चन्द्र जानामि' इत्यादि संशयविपर्ययाज्ञाननिवर्तकत्वं चन्द्रत्वेतरधर्मानवच्छिन्नचन्द्र निरवच्छिन्नविषयताकत्वेन ननु समानप्रकारकत्वेनेत्यनुभवानुरोधात्

विकासः

तथा विशिष्टज्ञानोत्तरजायमानस्य निर्विकल्पकस्य ब्रह्मज्ञानस्यापि संशयविपर्ययाज्ञाननिवर्तकत्वम् । अज्ञानमपि च केवलब्रह्मविषयकं निर्विकल्पं ब्रह्मज्ञानमपि तथैवेत्युभयोः समानविषयकत्वमुपपन्नमेव । घटमुद्गरपातयोरिव प्रतिबध्यप्रतिबन्धकभावान्यस्यैव वा निवर्त्यनिवर्तकभावस्य ज्ञानाज्ञानयोरुपगमान्नदोष इत्यवगन्तव्यम् ।

भाष्ये—'सर्वज्ञस्वरूपकारणविषयाणीति । अत्रैवं विचिकित्सन्ते—द्वैतवादिनः—चेतनस्य ब्रह्मणो जगदुपादानत्वे जगदपि चेतनं स्यादुपादानोपादेययोः समानगुणत्वदर्शनात् नहि नीलतन्तुभ्यो जायमानः पटो रक्तो भवतीति, तदेतन्न युक्तम्, उपादेये हि उपादानस्य सर्वधर्मान्वये उपादेयत्वमेव व्याहन्येतातः कस्यचिदेव धर्मस्यान्वयो न तु यावद्धर्माणामित्येवोपगन्तव्यम् । अस्ति च जगति ब्रह्मधर्मस्य सत्त्वस्यान्वयः 'सन् घट'इत्यादि प्रतीतेः, दृश्यते च गोमयाद्विलक्षणस्य वृश्चिकस्योत्पत्तिः । शुक्लनीलादिनानावर्णकेभ्यस्तन्तुभ्यश्चैकस्य विलक्षणस्य चित्रपटस्योत्पत्तिः एवं तार्किकाणामणुपरिमाणात्परमाणोर्द्व्यणुकस्य द्व्यणुकत्रयाच्च त्रसरेणोर्महत उत्पत्तिः, नच तत्र तत्र कारणगुणः कार्यमनुगच्छतीति । अपि चेयमापत्तिः ब्रह्मपरिणामवादिनमेवालिङ्गते न विवर्त्तवादिनम्, विवर्त्तवादे हि अविद्यैव सर्वानर्थसम्भारवाहिनी, ब्रह्म तु अधिष्ठानमात्रतया कारणमुच्यते तदुक्तं वार्तिककृद्भिः—

"अस्य द्वैतेन्द्रजालस्य यदुपादानकारणम् ।
अज्ञानं तदुपाश्रित्य ब्रह्मकारणमुच्यते ॥" इति ।

अतएव 'अदृश्यत्वादिगुणको धर्मोक्तेः' इति सूत्रभामत्याम्—

"विवर्तस्तु प्रपञ्चोऽयं ब्रह्मणोऽपरिणामिनः ।
अनादिवासनोद्भूतो न सारूप्यमपेक्षते ॥ इति ।

न खलु बाह्यसारूप्यनिबन्धन एव सर्वो विभ्रम इति नियमनिमित्तमस्ति आन्तरादपि कामक्रोधभयोन्मादस्वप्नादेर्मानसादपराधात्सारूप्यानपेक्षात्तस्य विभ्रमस्य दर्शनात् अपि च हेतुमति विभ्रमे तदभावादनुयोगो युज्यते अनाद्यविद्यातद्वासनाप्रवाहप्रतीतस्तु नानुयोगमर्हति तस्मात्परमात्मविवर्त्ततया "प्रपञ्चस्तद्योनिः भुजङ्ग इव रज्जुविवर्त्ततया न तु परिणामितया" इत्युक्तम् । तस्मान्न विवर्त्तवादिनं निरस्तसमस्तविषयानुरागमज्ञानपरिणामतया जगतो मिथ्यात्वं वदन्तं काप्यापत्तिरनुपपत्तिर्वा कामयते ।

यदपि ब्रह्मण एकस्मात्कथं विचित्रं क्रमिकं कार्यमुत्पद्येत न ह्येकस्मादक्रमवद्विलक्षणानेकसहकारिरहितात्क्रमिकं विचित्रमनेकं कार्यं भवितुमर्हति तादृशसहकारिसम्पत्तौ चाद्वितीयत्वं व्याहन्येतेति परैराशंक्यते तदप्येतेनैव परास्तम् । परमार्थसदद्वितीयस्य हि ब्रह्मणो निखिलधर्मरहितस्य नास्त्येव कारणत्वं नापि च तस्य कार्यम्, कार्यं तु जगत्

विकासः

विचित्रानेकक्रमिकविपाकशालिपुण्यापुण्यपुञ्जसहकृतायाः ब्रह्मविषयिण्या … एव ब्रह्मणस्तु तद्विषयतया कारणत्वं क्वचित्प्रतिपाद्यते वस्तुतो निर्विशेष … मिथ्यात्वं जगतः स्फुटीकर्त्तुम्, कारणत्वेनाभिमते हि प्रतीयमानस्य कार्यस्य … दपि न स्थितिरवधार्यतेऽतो भवति तस्य मिथ्यात्वम्, एतन्मूलक एवाध्यारोप … परिस्फुरति। मायोपाधिके तु भगवति भवे भवत्येव कर्तृत्वरूपं भवकारणत्वम्, … वैषम्यनैर्घृण्यप्रसङ्गोऽपि यतः प्राणिनां स्वस्वादृष्टपरम्परासम्पादितत्वात्सुख … तदेतत् 'वैषम्यनैर्घृण्ये न' इति सूत्रे प्रतिपादयिष्यति सूत्रकारो भाष्यकारश्च …

एतेन 'नहि प्रयोजनमनुद्दिश्य मन्दोऽपि प्रवर्त्तते' ईश्वरस्य च … किञ्चित्प्रयोजनमस्तीति कथं स जगज्जनयितुं यतेतेति शङ्कापि पराहता, तत्र … भावाऽनादिपरम्पराप्राप्तप्राणिपुण्यापुण्यपुञ्जसहकृताऽविद्यैव हि ईश्वरमपि … प्रवर्त्तयति तस्मान्नानुपपत्तिरापत्तिर्वा काचित्, नचैतावता द्वैतापत्ति … दविद्यादीनाम् ।

यदपि कुलालकुविन्दादेः शरीरवत एव कारणत्वमुपलब्धमिति नाशरीरस्येश्वरस्य … संभवतीति परैरुद्भाव्यते तदपि समाहितम्, 'अतर्क्यैश्वर्यं त्वयनवद्य …' इत्यभिदधताऽतर्क्यैश्वर्यत्वविशेषणमप्रतिमशक्तित्वरूपमुपाददता भगवता पुनः … स्तोत्रे। तस्मात् श्रुतिसमधिगम्ये सर्वातिशायिनि विचित्रशक्तिशालिनि मायिनि … मात्मनि नास्पदमादधाति कुतर्कशतमपि, ईश्वरस्य शक्तिविशेषादेवोपपत्तेः। …

'पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च'

इति (स्वाभाविकी, अनादिः शक्तिः सम्बन्धाज्ज्ञानबलक्रिया च सर्वज्ञत्वं … च) दृश्यते चेदानीमपि यादृशं कार्यमल्पशक्तिमता पुरुषेण गरीयसा भूयसा … यसाऽनेहसा सम्पाद्यते तादृशमेव च कार्यमधिकशक्तिमता बलीयसा पुंसा … साधनेनाल्पीयसा समयेन सम्पाद्यते इति । योगिभिश्च बहिः साधननिरपेक्षैः … कानि विविधानि कार्याणि सम्पाद्यन्ते इति, किमु वक्तव्यमनन्तशक्तेः … तिशयैश्वर्यशालिनो मायिनो बाह्यसाधननिरपेक्षस्येश्वरस्य ब्रह्माण्डकाण्डनिर्माण … कार्यसम्पादने, इति भवति सर्वमनवद्यम्। एवञ्चाद्वितीयं ब्रह्मैव परमार्थ … मायोपाधिकतया ईश्वरो जगत्कारणमन्तःकरणोपाधिकतया जीव इति च … धिना क्रियते भेदरूपः' एकं सद्विप्रा बहुधा वदन्ति, एक एव तु भूतात्मा भूते भूते … इत्यादिश्रुतिशतेभ्यः । सेयमद्वैतमतिर्न कुतर्कशतमवतार्यानादरणीया। … नैषा तर्केण मतिरापनेया' इति । अपि चेयमद्वैतमतिः संसारहुतभुजि हूयमान … कामक्रोधशोकमोहारातिनिराकरणपटीयसी पुत्रदारादिष्वनासक्तिं सम्पादयन्ती … दिप्रयुक्तशोकाद्यनर्थशतसंभार मपाकुर्वती दृष्टार्थाऽपि, अतएवोक्तमद्वै … खण्डनकृद्भिः—

विकासः

धीधनाः ! साधनायास्यास्तदा प्रज्ञां प्रयच्छथ ।
क्षेप्तुं चिन्तामणिं पाणिलब्धमब्धौ यदीच्छथ ॥" इति ।

तस्मात् तमेवैकं विजानथ आत्मानमन्या वाचो विमुञ्चथ, इत्यादि श्रुतिप्रतिपादिता विषयाभिनिवेशत्यागपूर्वकमद्वैतमतिरेव सम्पादनीया ।

इति द्वितीयसूत्र विकासः समाप्तः ।
साम्बशिवार्पणमस्तु ।



जगत्कारणत्वप्रदर्शनेन सर्वज्ञं ब्रह्मेत्युपक्षिप्तम्, द्रढयन्नाह—

## शास्त्रयोनित्वात् ॥३॥

महत ऋग्वेदादेः शास्त्रस्यानेकविद्यास्थानोपबृंह...

भामती

सूत्रान्तरमवतारयितुं पूर्वसूत्रसंगतिमाह—जगत्कारणत्वप्रदर्शने...

शास्त्रयोनित्वात् ॥ ३ ॥

न केवलं जगद्योनित्वादस्य भगवतः सर्वज्ञता, शास्त्रयोनि... बोद्धव्या। शास्त्रयोनित्वस्य सर्वज्ञतासाधनत्वं समर्थयते-महत ऋग्वे... दादेः शास्त्रस्येति। चातुर्वर्ण्यस्य चातुराश्रम्यस्य च यथायथं... दिश्मशानान्तासु ब्राह्ममुहूर्तोपक्रमप्रदोषपरिसमापनीयासु नित्य... ककाम्यकर्मपद्धतिषु च ब्रह्मत्वे च शिष्याणां शासनात् शास्त्रं...

प्रकाशः

ननु ब्रह्मणः सर्वज्ञत्वं जगद्योनित्वादेवाधिगतं पुनः शास्त्र... तत्साधनं पौनरुक्त्यमापादयति शास्त्रस्यापि जगन्मध्ये प्रवेशादित्याश... ङ्कामपनुदति-जगत्कारणत्वेति। एवं च पूर्वसूत्रे प्रतिपादितस्य जगत्कारणत्वस्य सर्वज्ञत्वं विनाऽनुपपद्यमानतयाऽर्थतः प्राप्तस्य सर्वज्ञत्वस्य सूत्रेणानेन ... दुपपाद्योपपादकभावः सम्बन्धः सूचितः। तमेवाह-पूर्वसूत्रेति। ... रपेक्ष्येण केवलेनापि शास्त्रयोनित्वेन हेतुना भवति भगवतो भवत्य सर्व... पौरुषेयशंका समुन्मिषतीत्यभिप्रेत्याह—न केवलमिति। ऋग्वेदादे... वर्णयति चातुर्वर्ण्यस्येत्यादिना। एवं च वेदस्य नित्यतया न ... ब्रह्मणः संभवतीत्याशंकामपाकर्तुमपि शास्त्रयोनित्वादिति सूत्रं प्रवृत्तं ... न्तव्यम्। पुराणन्यायमीमांसाधर्मशास्त्राण्येतानि चत्वारि, शिक्षाकल्पो ... निरुक्तं छन्दो ज्योतिषमिति षडङ्गानि एतानि संकलय्य दश वि...

